# ॥ श्रीदशावतारस्तोत्रम् ॥

नमोऽस्तु नारायणमंदिराय नमोऽस्तु हारायणकंधराय ।
नमोऽस्तु पारायणचर्चिताय नमोऽस्तु नारायण तेऽर्चिताय ॥ १ ॥

नमोऽस्तु मत्स्याय लयाब्धिगाय नमोऽस्तु कूर्माय पयोब्धिगाय ।
नमो वराहाय धराधराय नमो नृसिंहाय परात्पआय ॥ २ ॥

नमोऽस्तु शक्राश्रयवामनाय नमोऽस्तु विप्रोत्सवभार्गवाय ।
नमोऽस्तु सीताहितराघवाय नमोऽस्तु पार्थस्तुतयादवाय ॥ ३ ॥

नमोऽस्तु बुद्धाय विमोहकाय नमोऽस्तु ते कल्किपदोदिताय ।
नमोऽस्तु पूर्णामितसद्गुणाय नमोऽस्तु नाथाय हयाननाय ॥ ४ ॥

करस्थशंखोल्लसदक्षमालाप्रबोधमुद्राभयपुस्तकाय ।
नमोऽस्तु वक्त्रोद्गिरदागमाय निरस्तहेयाय हयाननाय ॥ ५ ॥

रमासमाकारचतुष्टयेन क्रमाच्चतुर्दिक्षु निषेविताय ।
नमोऽस्तु पार्श्वद्वयगद्विरूपश्रियाऽभिषिक्ताय हयाननाय ॥ ६ ॥

किरीटपट्टांगदहारकांचीसुरत्नपीतांबरनूपुराद्यैः ।
विराजितांगाय नमोऽस्तु तुभ्यं सुरैः परीताय हयाननाय ॥ ७ ॥

विदोषकोटींदुनिभप्रभाय़ विशेषतो मध्वमुनिप्रियाय ।
विमुक्तवंद्याय नमोऽस्तु विष्वग्विधूतविघ्नाय हयाननाय ॥ ८ ॥

नमोऽस्तु शिष्टेष्टदवादिराजकृताष्टकाभिष्टुतचेष्टिताय ।
दशावतारैस्त्रिदशार्थदाय निशेशबिंबस्थहयाननाय ॥ ९ ॥

॥ इति श्रीवादिराजतीर्थश्रीचरणविरचितं दशावतारस्तोत्रम् ॥